॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

## अद्भुत रामायणे

# ॥ हनुमत्कृत श्रीरामस्तवराज ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara***
***Jagadguru Rāmānandāchārya***
***Śrī Svāmī Rāmabhadrāchārya***

सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।
अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥

ध्यात्वा हृदिस्थं प्रणिपत्य मूर्ध्ना बद्धांजलिर्वायुसुतो महात्मा।
ओंकारमुच्चार्य विलोक्य देवमंतः शरीरे निहितं गुहायाम्॥ १॥

रामं महात्मानम कुंठशक्तिं सनंदमुख्यैः स्तुतमप्रमेयम्।
पुष्टाव च ब्रह्ममयैर्वचोभिरानंदपूर्णायितमानसः सन्॥ २॥

त्वामेकमीशं पुराणं प्राणेश्वरं राममनन्तयोगम्।
नमामि सर्वांतर सन्निविष्टं प्रचेतसं ब्रह्ममयं पवित्रम्॥ ३॥

पश्यंति त्वां मुनयो ब्रह्मयोनिं दांताः शांता विमलं रुक्मवर्णम्।
ध्यात्वात्मस्थमचलं स्वे शरीरे कविं परेभ्यः परमं परं च॥ ४॥

त्वत्तःप्रसूता जगतःप्रसूतिः सर्वात्मसृष्टेः परमाणुभूतः।
अणोरणीयात्महतोमहीयांस्त्वामेव सर्वे प्रवदंति संतः॥ ५॥

हिरण्यगर्भो जगदंतरात्मा त्वत्तोऽधिजातः पुरुषः पुराणः।
स जायमानो भवता विसृष्टो यथाविधानं सकलं ससर्ज॥ ६॥

त्वत्तो वेदाः सकलाः संप्रवृत्तास्त्वय्येवान्ते संस्थितिं ते लभंते।
पश्यामि त्वां जगतो हेतुभूतं नृत्यं तं स्वे हृदये संनिविष्टम्॥ ७॥

त्वयैवेदं भ्राम्यते ब्रह्म चक्रं मायावी त्वं जगतामेकनाथः।
नमामि त्वां शरणं संप्रपद्ये योगात्मानं चित्पतिं दिव्यनृत्यम्॥ ८॥

पश्यामि त्वां परमाकाशमध्ये नृत्यंतं ते महिमानं स्मरामि।
सर्वात्मानं बहुधा संनिविष्टं ब्रह्मानंदमनुभूयानुभूय॥ ९॥

ओंकारस्ते वाचको मुक्तिबीजं त्वामक्षरं प्रकृतौ गूढरूपम्।
त्वं त्वां सत्यंप्रवदंतीह संतः स्वयंप्रभं भवतो यत्प्रकाशम्॥ १०॥

स्तुवंति त्वां सततं सर्वदेवा नमंति त्वामृषयाः क्षीणदोषाः ।
शांतात्मानः सत्यसंधं वरिष्ठं विशंति त्वां यतयो ब्रह्मनिष्ठाः ॥ ११ ॥

एको वेदो बहुशाखो ह्यनंतस्त्वामेवैकं बोधयत्येकरूपम् ।
संवेद्यं त्वां शरणं ये प्रपन्नास्तेषां शांतिः शाश्वती नेतरेषाम् ॥ १२ ॥

भवानीशोऽणिमादिमां स्तेजोराशिर्ब्रह्मविश्वं परमेष्ठी वरिष्ठः ।
आत्मानंदं चानुसूयानुशेते स्वयंज्योतिर्वचनो नित्यमुक्तः ॥ १३ ॥

एको देवस्त्वं करोषीह विश्वं त्वं पालयस्यखिलं विश्वरूपः ।
त्वय्येवास्ते विलयं विंदतीदं नमामि त्वां शरणं त्वां प्रपन्नः ॥ १४ ॥

त्वामेकमाहुः परमं च रामं प्राणं वहंतं हरिमित्रमीशम् ।
इन्दुं मृत्युमनलं चेकितानं धातारमादित्यमनेकरूपम् ॥ १५ ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतो धर्मगोप्ता सनातनस्त्वं पुरुषोत्तमोऽसि ॥ १६ ॥

त्वमेव विष्णुश्चतुराननस्त्वं त्वमेव रुद्रो भगवानपीशः ।
त्वं विश्वनाभिः प्रकृतिः प्रतिष्ठा सर्वेश्वरस्त्वं परमेश्वरोऽसि ॥ १७ ॥

त्वामेकमाहुः पुरुषं पुराणमादित्यवर्णं तमसः परस्तात् ।
चिन्मात्रमव्यक्तमचिंत्यरूपं खं ब्रह्मशून्यं प्रकृतिं निर्गुणं च ॥ १८ ॥

यदन्तरा सर्वमिदं विभाति यदव्ययं निर्मलमेकरूपम् ।
किमप्यचिंत्यं तव रूपमेकं यदंतरा यत्प्रतिभाति तत्त्वम् ॥ १९ ॥

योगेश्वरं रूपमनन्तशक्तिं परायणं ब्रह्मतनुं पवित्रम् ।
नमाम सर्वे शरणार्थिनस्त्वां प्रसीद भूताधिपते प्रसीद ॥ २० ॥

त्वत्पादपद्मस्मरणादशेषं संसारबीजं विलयं प्रयाति।
मनो नियम्य प्रणिधाय कायं प्रसादयाम्येकरसं भवंतम्॥ २१॥

नमोऽस्तु रामाय भवोद्भवाय कालाय सर्वेकहराय तुभ्यम्।
नमोऽस्तु रामाय कपर्दिने ते नमोऽग्नये दर्शय रूपमग्र्यम्॥ २२॥

ततः स भगवान्नामो लक्ष्मणेन सह प्रभुः।
संहृत्य परमं रूपं प्रकृतिस्थोऽभवस्वयम्॥ २३॥

स तस्य स्तवमाकर्ण्य वायुपुत्रस्य धीमतः।
प्राह गम्भीरया वाचा हनूमन्तं रघूत्तमः॥ २४॥

स्तोष्यंति येऽनया स्तुत्या ते यास्यंति परां गतिम्।
स्थिरो भव हनूमंस्त्वं कार्यमौपायिकं कुरु॥ २५॥

**इत्यार्षे श्रीमद्रामायणेवाल्मीकीये आदिकाव्ये अद्भुतोत्तरकाण्डे हनुमत्कृतस्तवराजे पञ्चदशः सर्गः॥ १५॥**